भ्रुवौ भुग्ने किंचिद्भुवनभयभङ्गव्यसनिनि
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे ।
धनुर्मध्ये सव्येतरकरगृहीतं रतिपतेः
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुभे ॥ ४६ ॥

तुझ्या भ्रूलेखांचें युगुल दिसतें जें कुटिलसें
जयाखालीं दोन्ही नयन भ्रमराचें सित असे ।
जगा वाटे हें तों मदनधनु सव्येतरकरीं
प्रकोष्ठीं मुष्टीनें गुपित दिसतें सज्जहि करीं ॥ ४६ ॥

अहः सूते सव्यं तव नयनमर्कात्मकतया
त्रियामां वामं ते सृजति रजनीनायकतया[१] ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिं
समाधत्ते संध्या दिवसनिशयोरन्तरचरीम् ॥ ४७ ॥

शिवे सव्यें नेत्रें सृजसि दिवसां सूर्य ह्मणुनी
दुजा नेत्रें रात्री करिशि शशिचें रूप जननी ।
करी संध्याकाळीं भगवति तुझी दृष्टि तिसरी
दिवारात्रींमध्यें सहजच असे अंतरचरी ॥ ४७ ॥

(१) 'नायकमयम्' इति पाठः.

विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपाधारापारा किमपि मधुरा भोगवतिका ।
अवन्ती दृष्टिर्या[1] बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४८ ।

विशाला जे आहे प्रगटरुप कल्याण करिते
अयोध्या नोहे कां किमपि मधुरा वा ह्मणविते ।
अवंती किंवा हे बहुनगरविस्तार इजला
असी वाटे तूझी नगरि विजयी दृष्टि मजला ॥ ४८ ॥

कवीनां संदर्भस्तबकमकरन्दैकरसिकं
कटाक्षव्याजेन[2] भ्रमरकलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरता
वसुं या संसर्गादलिकनयनं किंचिदरुणम् ॥ ४९ ॥

कवीच्या संदर्भस्तवकरससंपूर्णश्रवणें
कटाक्षव्याक्षेप भ्रमर करिचें कर्णि बसणें ।
न जाती तेथूनी तव नवरसें भ्रांत जइसे
तयांचा हर्षानें नयन तिसरा तांबट दिसे ॥ ४९ ॥

---

(१) 'दृष्टिस्ते' (२) 'भरितं कटाक्षव्याक्षेप'

शिवे शृङ्गारार्द्रा[1] तदितरमुखे कुत्सनपरा
सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जयति[2] दृष्टिः सकरुणा ॥५०॥

शिवासी शृंगारें इतर जन निंदेसि करिती
सरागें गंगेसी हरचरितिं आश्चर्य धरितीं ।
हराहीपासूनी मित सकळसौभाग्य जइसें
सख्यांशीं हास्यानें सकरुण असो जाण मज तें ॥ ५० ॥

गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती
पुरां भेत्तुश्चित्तं प्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टः स्मरशरविलासं कलयतः ॥ ५१ ॥

उमे गेले कर्णासमिप गरुडाचेपरि जणों
पुरारीचें चित्त क्षुधित परजे काय हि ह्मणों ।
तुझे हे कीं नेत्र क्षितिधरसुते दीसति तसे
जसे कर्णापाशी मदनशर वोढी तरि असे ॥ ५१ ॥

---

(१) 'शृङ्गाराङ्के तदितरजने'. (२) 'वितर दृष्टिं सकरुणाम्'.

विभक्तत्रैवर्ण्यं व्यतिकरितनीलाञ्जनतया[1]
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते ।
पुनः स्रष्टुं देवान्द्रुहिणहरिरुद्रानुपरतान्
रजः सत्वं बिभ्रत्तम इति गुणानां त्रयमिदम्[2]॥५२॥

तुझ्या नेत्रीं काळें प्रगट रुप तें अंजन दिसे
तयानें हें नेत्रत्रितय बहु शोभे तरि तुझें ।
महाकल्पीं गेले हरिहरविरंच्यादि न पुन्हा
सृजायाला त्यातें चरसि जवळी जाण त्रिगुणा ॥ ५२ ॥

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गातपनतनयेति ध्रुवममुं[3]
त्रयाणां तीर्थानामुपनयसि संभेदमनघे ॥ ५३ ॥

तुझ्या अंबे नेत्रीं अरुणधवलश्यामलकता
मला वाटे ते तों कनकनदगंगे रविसुता ।
दयादृष्टीनें तूं करिन ह्मणसी पावन मला
तिहीं तीर्थांचा हा ह्मणुन करिसी संगम भला ॥ ५३ ॥

---

(१) 'व्यतिकरतनीलाम्बुजतया'. (२) 'त्रयमिव'. (३) 'ध्रुवामिमं'.

तवापर्णे कर्णेजपनयनपैशून्यचकिता
निलीयन्ते तोये नियतमनिमेषाः शफरिकाः ।
इयं च श्रीर्बद्धच्छदपुटकपाटं कुवलयं
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥५४॥

अपर्णे त्वत्कर्णेजपनयनपैशून्य चकती
जळीं उन्मेषाच्या शफरि नियतत्वें च बुडती ।
दुचित्तेंही लक्ष्मी कमळग्रह लाऊनि फलते
भयानें प्रत्यूषीं निशिस उघडूनि प्रविशते ॥ ५४ ॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुः सन्तो धरणिधरराजन्यतनये ।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५५ ॥

निमेषोन्मेषांहीं प्रळय जन पावे त्रिजगतीं
भले संत ज्ञानी भगवति असें सत्य ह्मणती ।
त्वदुन्मेषें जालें जग सकळ याला प्रळयसा
न व्हायाला शंके न करिसि निमेषांसि सहसा ॥ ५५ ॥

(१) 'पुट' इति पाठः'

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियती
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ९६ ॥

विशाळा जे दृष्टी निळकमळकांतीसम बरी
ल्यानें दीनाला मज जननि तूं हानिसि जरी ।
जगीं मी धन्यत्वें वसन तुझि तों हानिहि नसे
नृपागारीं रानींसम किरण टाकी शशि कसे ॥ ९६ ॥

अरालं ते पालीयुगलमगराजन्यतनये
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम् ।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-
न्नपाङ्गव्यासङ्गो दिशति शरसंधानधिषणाम् ॥९७॥

कपोलांचें तूझ्या युगळ जननी दीसत कसें
स्मरारी शत्रूचें सशार धनु तें काय हि असें ।
असे जेथें कर्णत्यजुन तरि सापत्न लटतो
जना तेव्हां वाटे मदन शरसंधान करितो ॥ ९७ ॥

स्फुरद्दण्डाभोगप्रतिफलितताटङ्कयुगलं
चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् ।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
महावीरो मारः प्रमथपतये खं जितवते ॥ ५८ ॥

सुताटंकछाया जननि तुज गालावरि दिसे
चहूं चक्रांचा हा मदनरथ मानी मुख तुझें ।
वसोनीयां जेथें प्रथम तिजसीं द्रोह पुरवी
स्वयें जिंकी ज्याची अवनि रथ चाकें शशि रवी ॥ ५८ ॥

सरस्वात्याः सूक्तीरमृतलहरीकौशलहरी[१]
पिबन्त्या शार्वाणि श्रवणचुलकाभ्यामविकलम्[२] ।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ५९ ॥

विधीकन्या वाणी अमृतलहरी तूंच समुदा
पिशी वो शर्वाणि श्रवणचुळ वाही तरि सदा ।
चमत्कारें जेव्हां शिरकमळ हाले तरि तुझें
झणत्कारें कर्णाप्रति वचनभूषा वदतसें ॥ ५९ ॥

---

१) 'कोशसदृशीः' इति पाठः. (२) 'मविरतम्' इति पाठः.

**असौ नासावंशस्तुहिनगिरिवंशध्वजपट-**
**स्त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।**
**वहन्नन्तर्मुक्ताः शिशिरतरनिश्वासविहिताः**
**समृद्ध्या यस्तासां बहिरपि च मुक्तामणिधरः॥६०॥**

तुझ्या संपत्तीनें उचित रुप अह्मास हि फळे
जयामध्यें मुक्तागण शिरसि निश्वास घडले ।
तसा वेळू आला प्रकट माणि बाहेराचि दिसे
तयाला हें मोंती जन ह्मणतसे उत्तम असे ॥ ६० ॥

**प्रकृत्या रक्तायास्तव सुदति दन्तच्छदरुचेः**
**प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता ।**
**न बिम्बं त्वद्बिम्बप्रतिफलनरागादरुणितं**
**तुलामध्यारोढुं कथमिव न लज्जेत कलया ॥ ६१ ॥**

तवोष्ठाची अंबे सहजच असे तों अरुणता
बरी कीं साम्यत्वा कसि करिल ते विद्रुमलता ।
दुजें तें कीं बिंबाफलहि परि पाकास्तव तसें
तुला पावायाला भगवति न लाजेल हि कसें ॥ ६१ ॥

---

(१) 'घटिताः'. (२) 'क बिम्बं दृग्बिम्बप्रतिफलन'.

स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजडिमा ।
अतस्ते शीतांशोरमृतलहरीमम्लरुचयः
पिबन्ति स्वच्छन्दं निशिनिशि भृशं काञ्जिकधिया॥

स्मितज्योत्स्ना तूझ्या वदनशशिची पीत असतां
चकोरां जे जाली अतिमधुपणें चंचुजडता ।
ह्मणोनीयां स्वेच्छें शशिजअमृता अम्लरुचिनें
पिती रात्रीं रात्रीं बहुत बहु तें कांजिक मनें ॥ ६२ ॥

अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजडा
जपापुष्पछाया तव जननि जिह्वा विजयते ।
यदग्रासीनायाः स्फटिकदृषदस्वच्छविमयी
स्वरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा॥६३॥

अखंडत्वें जेंकां पतिगुणकथोच्चारण करी
जपापुष्पछायासदृश तव जिव्हांग कुमरी ।
पुढें जीच्या ऐसें स्फटिकदृषदांचेपरि रुची
अखंडत्वें पाहे वदत तनया जाण विधिची ॥ ६३ ॥

(१) 'चारु' इति पाठः. (२) 'जयति सा'. (३) 'दृषद-च्छविरुचिः'

रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभि-
र्निवृत्तैश्चण्डीशत्रिपुरहरनिर्माल्यविमुखैः।
विरिञ्चेन्द्रोपेन्द्रैः शशिशिशिरकर्पूरशबला[1]
विलुप्यन्ते मातस्तव वदनताम्बूलशकलाः॥ ६४॥

जितोनीयां दैत्यां हरुन शिरटोपा कवचि जे
फिरोनीयां आले विधिहरिपतींद्रांनुसहिजे।
तुझ्या तांबूलाचा शितलगणिका घेतिल सुखें
भवानी चंडीश त्रिपुरहरनिर्माल्यविमुखें॥ ६४॥

विपञ्च्या गायन्ती विविधमवदातुं पशुपते-
स्त्वयारब्धं वक्तुं चलितशिरसा[2] साधुवचनैः।
त्वदीये माधुर्यैरपलपिततन्त्रीकलरवा
निजां वीणां वाणी निचुलयति चैलेन निभृतम्॥६५

विपंचीनें शंभू गुण विविध गाईन ह्मणसी
हळू रागोद्धारें शिरकमळ तूं उंच करिसी।
तुझ्या माधुर्यानें बहुत तरि लाजोनिच खरी
विधीची जे कन्या पदर निजवीणेवर करी॥ ६५॥

---

(१) 'धवला विलिप्यन्ते.' (२) 'स्खलितवचसा साधुवचने.'

करा्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।
करग्राह्यं शंभोर्मुखमुकुरवृत्तं गिरिसुते
कथंकारं ब्रूमस्तव चिबुकमौपम्यरहितम् ॥ ६६ ॥

हिमाद्रीनें हातें स्पर्शित मुख जें वत्सलपणें
गिरीशानें प्रीतीस्तव अधरपाना उचलिलें ।
करीं शंभूच्या जें वरतुल जसाऽदर्शहि दिसे
तयाजोगी अंबे जगतिं उपमा जाण न दिसे ॥ ६६ ॥

भुजाश्लेषान्नित्यं पुर[1]विजयिनः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागुरुबहलजम्बालमलिना
मृणालीलालित्यं वहति यदधो हारलतिका ॥६७॥

जिला कांटे येती शिव करित आलिंगन जहां
दिसे ग्रीवा तूझी मुखकमळनाळासम तहां ।
स्वता जें कीं आहे मलिन अगुरुश्यामरुप कां
मृणालाचे शोभेसहि करित ते हारलतिका ॥ ६७ ॥

---

(१) 'पुरदमयितुः' इति पाठः.

गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे[1]-
र्विवाहव्यानद्धैः प्रगुणगुणसंख्याप्रतिभुवम् ।
विराजन्ते नानाविधमधुररागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥६८॥

गळीं रेखा तीन्ही दिसति प्रतिभूमीसहि वरी
विवाहीं जे बद्धत्रिगुणगुणसंख्या तरि खरी ।
मला वाटे नानाविध मधुररागास्तव कसे
तिहीं ग्रामींच्या ह्या नियमित शिवाचे पदरसे ॥ ६८ ॥

मृणालीमृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिः सौन्दर्यं सरसिरुहजः[2] स्तौति वदनैः ।
नखेभ्यः संत्रस्यत्प्रथममथनादन्धकरिपो-
श्चतुर्णां वक्राणां सममुभयहस्तार्पण[3]धिया ॥ ६९ ॥

तुझ्या जें कीं चाऱ्ही भुजहि कमळांचें बिज जसें
तयाच्या सौंदर्या विधि चहुंमुखीं वर्णित असे ।
नखांचें शंभूच्या भय धरित जोही मनिं अती
वदे या चौशीर्षा अभय मज दे तूं भगवती ॥ ६९ ॥

---

(१) 'निपुणे विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुवः' इति पाठः. (२) 'सरसिजभवः' इति पाठः. (३) 'हस्तार्पण' इति पाठः.

नखानामुद्द्योतैर्नवनलिनरागैर्विहसतां
कराणां ते कान्तिं कथय कथयामः कथममी[१] ।
कयाचिद्वा साम्यं भजतु कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतललाक्षारुणदलम् ॥ ७० ॥

नखांच्या दीप्तीनें नुतन कमळालागिं हरते
करांची जे कांती कसि तरि वदों तूंचि वद तें ।
कदाचित्ते लक्ष्मी कमळदळिं क्रीडे रसपदें
तई साम्यत्वा ये सुकरकलिकापद्मसमुदें ॥ ७० ॥

समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥७१॥

हरू खेदा माझ्या कुचयुग तुझें प्रस्नुत सदा
पिती एक्या वेळे तनययुग हेरंबहि मुदा ।
गजास्यें देखोनी निजहृदयिं शंकेस्तव करें
स्वकुंभांतें काळीं परिमृशतसे शीघ्र चतुरें ॥ ७१ ॥

---

(१) ‘कथमुभे’ इति पाठः.

अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ
न संदेहः स्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसंगमरसौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥ ७२ ॥

अहो अंबे तूझ्या कुचमणिघटीं अमृत वसे
यदर्थी तो मानी नगपतिसुते संशय नसे ।
पिती दोन्ही तूझे तनय वय कौमार पहिलें
तयांला अद्यापी सुख रमणिचेंही न कळलें ॥ ७२ ॥

वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः
समारब्धां मुक्तामणिभिरमलां हारलतिकाम् ।
कुचाभोगो बिम्बाधररुचिभिरन्तः शबलितां
प्रतापव्यामिश्रां पुरविजयिनः कीर्तिमिव ते ॥७३॥

कुचांमध्यें हारी मणिविमळ मुक्ता विलसती
गजाचे दैत्याचे घननिबिडसे कुंभ असती ।
मला भासे तेथें अरुणमणि देखोन बरवे
प्रतापें संमिश्रा त्रिपुरविजयी कीर्ति मिरवे ॥ ७३ ॥

तव स्तन्यं मन्ये धरणिधरकन्ये[1] हृदयतः
पयः पारावारं परिवहति सारस्वत इव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव य-
त्कवीनां प्रौढानामजनि कमनीयः कवयिता ॥७४॥

तुझे दोन्ही हे कां कुचहि कनकाचे घट जसे
निघाले दोर्मूलीं ह्मणुनि मदनें देखुनि असें ।
अहो याच्या भारें उदर लवलें मोडिल खरें
तिठाईं तो बांधे त्रिवळि लवलीवल्लिहि बरें ॥ ७४ ॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते जननि तव रोमावलिरिति ॥७५॥

हरक्रोधाग्नीनें विमळ शरिरें सर्व तपलीं
तुझ्या मांज्या दोन्ही ह्मणुनि मदनें झोंप त्यजिली ।
उठे तेथें तों धूसरळलतिकारूप विलसे
तिला जाणे चित्तीं सकळजन रोमावळि असें ॥ ७५ ॥

---

(१) 'तुहिनगिरिकन्ये' इति पाठः.

यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे
कृशे मध्ये किंचित्तव[१] जननि यद्भाति सुधियाम् ।
विमर्दादन्योन्यं कुचकलशयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभीकुहरिणीम् ॥ ७६ ॥

कलिंदाकन्येचे कृशहि लहरीचेपरि दिसे
कटी जे कां काळें जननि बहु शोभा करितसे ।
विमर्दानें दोघे कुचकलश संकोचित उरीं
कृशत्वानें व्योम प्रविशत असे नाभिकुहरीं ॥ ७६ ॥

स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता
जलावालं कुण्डं कुसुमशरतेजोहुतभुजः ।
रतेर्लीलागारं किमपि तव नाभीति गिरिजे
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ७७ ॥

दिसे गंगेचा हा स्थगित भवरा बा स्तन कले
लतारोमाळीचे तळवटिक आले हिमकले ।
स्मराग्नीकुंडाचे परि रतिस लीलाधर असे
स्वभक्तांचे सिद्धी बिळ किमु तुझी नाभिच दिसे ॥७७॥

---

(१) 'जननि तव तद्भाति' इति व्यस्तः पाठः.

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्तेर्नाभौ वलिषु शनकैस्त्रुट्यत इव[1] ।
चिरं ते मध्यस्य त्रुटिततटिनी नीरतरुणा
समावस्थः स्थेम्नो भवतु कुशलं शैलतनये ॥ ७८ ॥

स्वभावें जो क्षीण स्तनकठिणभारें श्रम जणों
लवे नाभीमध्यें त्रिवळित हळू मोडल ह्मणों ।
समावस्थेमध्यें परम जननी जो मज दिसे
तया तूझ्या मध्यें बहु दिवस कल्याण निवसे ॥ ७८ ॥

कुचौ[2] वेतौ स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलशाभौ कलयता ।
अलं त्रातुं गङ्गातटमिव विलग्नं तनुभुवा
त्रिधा नद्धं देवी त्रिवलि लवलीवल्लिभिरिव ॥७९॥

स्तनांच्या भारानें गुरु बहुत जों हास्य विलसे
कटाक्षाचेठाईं मदनवपु कादंब समजे ।
तुझेठाईं भ्रांति स्तवन नह्मणे हा हर असे
तुझ्या भक्तां तूझी प्रगटरुप ते मूर्ति विलसे ॥ ७९॥

(१) 'रुद्यत इव' इति पाठः. (२) 'सद्यः स्विद्य' इति पाठः.

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजां
नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधौ[1] ।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भागः[2] स्थगयति लघुत्वं नयति च ॥८०॥

हिमाद्रीचें मोठेपण बहुत विस्तार जघनीं
तुझेठाईं आलें मज गमतसे सत्य जननी ।
शिवे त्यासाठीं हा गुरु बहुत विस्तीर्ण विलसे
समग्रा पृथ्वीतें स्थगित लघुभारें करितसे ॥ ८० ॥

करीन्द्राणां शुण्डा कनककदलीकाण्डपटली-
मुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति ।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥ ८१ ॥

करींद्रांच्या सोंडा कनककदली हें द्वय बरें
तुझ्या मांड्या दोन्ही निपजति विजिंकोन चतुरें ।
तशा दोन्ही जानू विबुधगजकुंभांस जिणिती
नमस्कारें रुद्राप्रति कठिण जे वृत्त असती ॥ ८१ ॥

---

(१) 'दिनधे' इति पाठः. (२) 'भारः' इति पाठः.

पुरा[1] जेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ ते जङ्घे विषमविशिखो गाढमकृत[2] ।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगलं
नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥ ८२ ॥

शिवा जिंकायाला द्विगुणित शरें पंचविशिखें
सुजंघा ते भाते भरुन मग तो शीघ्रहि निघे ।
जयांच्या अग्रांतें दिसति शर पादांगुलिमिषें
नखाग्रांच्या भाळीं सुरमुकुटशाणावरि तिखें ॥ ८२ ॥

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८३ ॥

शिरें वेदांचीं हे धरिति शिखरें ज्यास ह्मणुनी
दयेनें तें माथां चरणकमळें ठेवि जननी ।
जयाचें तें पाद्योदक पशुपती घे निजजटीं
दिसे लाक्षालक्ष्मी अरुण बहु ते सूर्यनिकटीं ॥ ८३ ॥

(१) 'परा' इति पाठः. (२) 'बाढमकृत । यदग्रे लक्ष्यन्ते.'

नमोवाकं ब्रूमो नयनरमणीयाय पदयो-
स्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे ॥ ८४ ॥

तुझ्या दोन्ही पायां नमन तरिं साष्टांग करितों
दिसे जेथें अंबे प्रगटरुचि आलक्त रमतो ।
करी ईर्षा ज्याची प्रमदवनकंकेलितरु हा
जयातें वंदाया पशुपति करीतो स्पृहरुहा ॥ ८४ ॥

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरणकमले[1] नाटयति ते ।
चिरादन्तः शल्यं दहनकृतमुन्मीलितवता
तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ८५

मृषा केलें गोत्रस्खलन ह्मणुं संलज्ज असतां
स्वभर्ताराभाळीं चरणयुगळें तूं प्रहरितां ।
तुला कोटीशब्दीं जयजय करी मन्मथ कसा
दिसां कित्येकांचें दहनकृतशल्येंविण जसा ॥ ८५ ॥

---

(१) 'युगले' इति पाठः.

हिमानीहन्तव्यं हिमगिरितटा[१]क्रान्तरुचिरौ
निशायां निद्राणं निशि च परभागे च विशदौ ।
परं लक्ष्मीपात्रं श्रिय[२]मतिदिशन्तौ सुयमिनः
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम्॥८६॥

हिमानें जें वाळे हिमगिरितटीं जेविं चरती
निजे रात्रीमध्यें दिननिशिस जे स्वच्छ असती ।
वसे लक्ष्मी जेथें श्रियनिजजनां देति तारि कां
सरोजातें जिंकी तव चरण आश्चिर्य गमकां ॥ ८६ ॥

पदं ते कान्तीनां प्रपदमपदं देवि विपदां
कथं नीतं सद्भिः कठिनकमठीखर्परतुलाम् ।
कथं वा हस्ताभ्यामुपनयनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८७ ॥

वसे कांती जेथें विपद तरि नापद्मकमळा
कसी द्यावी त्याला कठिणकमठीखापरतुला ।
विवाहाचे काळीं धरुन निजहातें पुरहरे
दयेनें जें पाव्यावर बसविलें सुंदर बरें ॥ ८७ ॥

---

(१) 'क्रान्तिचतुरौ'. (२) 'मपि सृजन्ती सुमयिनां'.

नखैर्नाग[1]स्त्रीणां करकमलसंकोचशशिभि-
स्तरूणां दिव्यानां हसत इव ते चण्डि चरणौ ।
फलानि स्वस्थेभ्यः किसलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८८ ॥

नखांहीं हांसे ती चरणकमळें दिव्य तरुला
जयाच्या सामर्थ्यी वदति अवघ्या स्वर्गअबला ।
तरू देती स्वस्था फलकिसलयाग्रेंचि करणी
हरी इंद्रा लक्ष्मी प्रतिदिवसिं संप्राप्त चरणीं ॥८८ ॥

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।
प्रकृत्या मूकानामपि च कविताकारणतया
यदादत्ते वाणी मुखकमलताम्बूलरसताम् ॥ ८९ ॥

तुझे पाईं आलक्तकरस असे तोचि धुवुनी
कधीं मी विद्यार्थी पिइन जळ तें सांग जननी ।
स्वभावें मूकेही वदति धरिती शक्तिकविता
प्रसादें तीर्थाच्या मुखकमळिं तांबूल रसता ॥ ८९ ॥

---

(१) 'नाक' इति पाठः.

पदन्यासक्रीडापरिचयमिवादा[1]तुमनस-
श्चरन्त्यास्ते खेलं भवनकलहंसा न जहति ।
शुचिक्षेपे शिक्षां सुभगमणिमञ्जीररणित-
च्छलादाचक्षाणं च[2]रणयुगलं चारुचलिते ॥ ९० ॥

शिवे खेळायाला भवनिं कलहंसें विचरती
तुझ्या मागें येती पदठिवणि त्याला न त्यजिती ।
भवानी मंजीरध्वनि उठतसे पाय चलतां
मिसें त्या हंसाला जन शिकविसी पाय ठिवितां ॥ ९० ॥

द[3]दाने दीनेभ्यः श्रियमनिशमीशानुसदृशी-
ममन्दं सौन्दर्यं स्तबकमकरन्दं विकिरति ।
तवास्मिन्मन्दारस्तबकसुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणैः षट्चरणताम् ॥९१॥

---

(१) 'मिवारब्धुमन' इति पाठः. (२) 'चरणकमलं' इति पाठः.
(३) अस्य पद्यस्य समश्लोकी नोपलभ्यते.

अराला केशेषु प्रकृतिसरला मन्दहसिता
शिरीषाभा गात्रे दृषदिव कठोरा कुचतटे ।
भृशं तन्वी मध्ये पृथुरु[१]रसि वरारोहविषये
जगत्रातुं शंभोर्जयति करुणा काचिदरुणा ॥ ९२ ॥

अराळा जे केशीं सरल मृदुहास्यें कृश कटी
शिरीषाची शोभा शरिरिं कठिणा जे कुचतटीं ।
पुरोभागीं मोठी जगतिकलनी शंभुकरुणा
वसे सर्वोत्कर्षी भगवति शिवे काचिदरुणा ॥ ९२ ॥

पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः
सपर्या मर्यादा तरलकरुणानामसुलभा ।
तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥९३॥

पुरारीचें अंतःपुर असासि तूं वो भगवती
तुझे पायीं पूजा तरलकरुणाला न घडती ।
तऱ्ही सिद्धी नेले विधिशतमखादीक सुरही
तुझ्या दारापाशीं वसति अणिमादौविदलही ॥ ९३ ॥

---

(१) 'रपि' इति पाठः.

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः
शिवः स्वच्छछायाकपटघटितप्रच्छदपटः[1] ।
त्वदीयानां भासां प्रतिफलनरागारुणतया[2]
शरीरे शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ९४

पलंगाचे माचे द्रुहिणहरिही ईश्वर तुझे
शिवे स्वच्छ च्छाया प्रगट करुनी गुप्त विलसे ।
शरीराच्या कांती अरुण बहु लाक्षारस जसा
तयानें तो भासे सकल तव शृंगार सहसा ॥ ९४ ॥

कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयोभूयो निबिडयति नूनं तव कृते ॥ ९५ ॥

कलंकी कस्तूरीं मरकतकरंडा शशि असे
कला कर्पूराही सहजगति जो पूर्ण विलसे ।
सरे नित्यत्वेंसीं त्वदिय उपभोगास्तव रिता
मला वाटे त्याही विधि पुनरपी होय भरिता ॥ ९५ ॥

---

(१) 'घटितकपट' इति पाठः. (२) 'लाक्षारुण' इति पाठः.

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो
निषेव्ये नित्यं त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो
महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥ ९६ ॥

शरीराचे तूझ्या किरणिं अणिमाद्यादि वसल्या
असी जोही ध्यातो करिल हरलक्ष्मी तृणतुला ।
यदर्थीं तो अंबे किमपि तरि आश्चर्यहि नसे
तयातें संवर्तीं अनळ सुखिं ओवाळित असे ॥ ९६ ॥

समुद्भूतस्थूलस्तनभरमुरश्चारुहसितं
कटाक्षे कंदर्पः कतिचन कदम्बद्युतिवपुः ।
हरस्य त्वद्भ्रान्तिं मनसि जनयन्तः[1] सुवदने
भवत्या ये भक्ताः परिणतिरमीषामियमुमे ॥ ९७ ॥

स्तनांच्या भारानें गुरु बहुत जें हास्य विलसे
कटाक्षांचे ठांईं मदन वपु कादंब समजे ।
तुझेठाईं भ्रांतीस्तव जन ह्मणे हा हर असे
तुझ्या भक्तां तूझी प्रगटरुप ते मूर्ति विलसे ॥ ९७ ॥

---

(१) 'यन्ति स्म विमला' इति पाठः.

कलत्रं वैधात्रं कतिकति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः ।
महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामाश्लेषः[1] कुरबकतरोरप्यसुलभः ॥ ९८ ॥

विधीचे पत्नीतें कविजनहि कित्येक भजती
धनांहीं लक्ष्मीचा पति बहुत ऐसे ह्मणविती ।
महादेवावांचूनहि तव कुचाभोगहि शिवे
महापातिव्रत्यें कुरवकतरू तोहि नपवे ॥ ९८ ॥

गिरं[2] देवीमाहुर्द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिःसीमसहिमा
महामाये विश्वं भ्रमयसि परब्रह्ममहिषि ॥९९ ॥

विधात्याची पत्नी निपुणतर वाणी च ह्मणती
हरीची तों लक्ष्मी हरसहचरी पार्वति सती ।
तुरीया तूं अंबे असलिस परब्रह्ममहिषी
महामाये विश्वादिक सकळ जें हें भ्रमविसी ॥ ९९ ॥

---

(१) 'भ्यामासङ्गः' इति पाठः. (२) 'गिरामाहुर्देवीं द्रुहिण' इति पाठः.

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विजयते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरंजीवन्नेव क्षपितपशुपाशव्यतिकरः
परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ॥ १००॥

शिवे त्वद्भक्तीनें विधिहरिकलत्रासि जिणि जो
परब्रह्माचा जो रसपति असे दिव्यतनु तो ।
जयातें देखोनी सकळ चलती दिव्य वनिता
विधीकन्या लक्ष्मी रतिहि त्यजिती त्या पातिव्रता ॥१००॥

निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निरा[1]कारज्ञाने नियमपरचित्तैकनिलये ।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतिपदे
निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् १०१

भवानी शर्वाणी हिमगिरिसुते तूं भगवती
असीं नावें लोकीं सुजनजन कित्येक ह्मणती ।
मऱ्हाष्ट्री भाषेनें स्तुति तुझिच म्यां जेविं रचिली
अपर्णे स्वीं कर्णीं श्रवण करिं ते सौख्यलहरी ॥ १ ॥

---

(१) 'घाटज्ञाने' इति पाठः.

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधा सूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम्॥२॥

दिव्याच्या ज्योतीनें उजळण जसें होय रविसी
शशीचें घेऊनी अमृतकरि पूजा नवरसीं ।
समुद्राची तृप्ती उदक तरि तेथीलच जसें
तुझाज्ञेनें वाचेंकरुन वदलों मी स्तुति असें ॥ २ ॥

सोळासोळाशकांकीं शक तरि गणिजे जो असे पैठणींचा
भावासंवत्सरींचा सुदिवस दसरा वार भूमीसुताचा ।
केली हे त्यादिशीं म्या तरि सुखलहरी जे महाराष्ट्रभाषा
श्रोते हो आयकावें कवि वसत असे आपुल्या तो स्वदेशा ॥ १॥

साठिंपिंपळगांव उत्तम नाम ज्यासहि तें असे
पापनाशक गौतमीतटिं उत्तरे तिरिं जे वसे ।
दंडकारण लोकसज्जन अंबाडातळिं वोढते
ज्योतिषि द्विज फार ते स्थळिं सामगायन बोलते ॥२॥

---

(१) 'स्वकीयाभि' इति पाठः.

गोविंदपोळकवि ते स्थळिं राहताहे
अंबे कृपेस्तव असे मति कीं जयाहे ।
आनंदसौख्यलहरी स्तुति नाम लेखा
पंचोत्तराधिकशतेकृति पद्यसंख्या ॥ ३ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीमत्परमहंसपरिव्राजकाचार्य वर्य श्रीमच्छंकराचार्यविरचितं सौन्दर्यलहरीस्तोत्रं संपूर्णम् ।

# विक्रीस तयार.

## संस्कृत पुस्तकें.

| | किं० | ट० |
|---|---|---|
| अष्टाध्यायीसूत्रपाठ ... ... ... ... | ।– | ०॥ |
| अनर्घराघव नाटक ... ... ... ... | २ | ०≡ |
| अन्नंभट्टकृत तर्कसंग्रह व दीपिका ... ... | ।= | ०– |
| अवधूतगीता ( साधी ) ... ... ... | ०=॥ | ०॥ |
| अवधूतगीता ( रेशमी पुठ्याची ) ... ... | ।– | ०॥ |
| आर्यासप्तशती ... ... ... ... | १॥ | ०= |
| इसावनीतिकथा ( दोन भाग ) प्रत्येकीं ... ... | ।= | ०॥ |
| उदासीनसाधुस्तोत्र ... ... ... | ।– | ०– |
| कर्णसुन्दरी ... ... ... ... | ॥० | ०– |
| कथासरित्सागर ... ... ... ... | ६ | ॥० |
| कर्पूरमञ्जरी आणि बालभारत नाटक ... ... | १ | ०–॥ |
| कादम्बरीकथासार ... ... ... ... | ॥० | ०– |
| कालिदासकृत रघुवंश काव्य ... ... ... | २ | ०≡॥ |
| कालिदासकृत रघुवंश काव्य बारीक टैपांत ... | १ | ०= |
| कालिदासकृत कुमारसंभव काव्य मल्लिनाथकृत टीका ( सर्ग १–८ ) व सीतारामकृत टीका ( सर्ग ८–१७ व पाठान्तरें यांसहित ... ... | २ | ०≡॥ |
| कालिदासकृत मेघदूत काव्य मल्लिनाथकृत टीका ... | ॥० | ०– |
| कालिदासकृत मेघदूत काव्य मल्लिनाथकृत टीका, पाठान्तरें व अर्थप्रदर्शक इंग्रजी टिप्पणी यांसहित ... | ॥।० | ०= |
| कालिदासकृत अभिज्ञानशाकुन्तल नाटक राघवभट्ट टीका, बारीक टैपाचा ... ... ... | १। | ०–॥ |
| कालि० अभिज्ञानशाकुन्तल नाटक इंग्रजी टिपा यांसहित | २ | ०=॥ |

| | कि० | ट० |
|---|---|---|
| कालिदासकृत ऋतुसंहार काव्य मणिरामकृत टीका, पाठान्तरें व अर्थप्रदर्शक इंग्रजी टिप्पणी यांसहित; व शृङ्गारतिलक काव्य ... ... | ·।= | ᓀ- |
| केवळ टीकेसहित ... ... ... | ·।· | ᓀ- |
| काव्यालंकार रुद्रटकृत नमिसाधुकृत टीकेसहित ... | १॥ | ᓀ= |
| कंसवध नाटक शेषकृष्णकृत ... ... ... | ·॥· | ᓀ- |
| कृष्णसहस्रनाम ... ... ... ... | ᓀ= | ᓀ॥ |
| गणपतिस्तोत्र ... ... ... ... | ᓀ। | ᓀ॥ |
| गणेशसहस्रनामावळी ... ... ... | ᓀ-॥ | ᓀ॥ |
| गणेशगीता ( साधी ) ... ... ... | ᓀ=। | ᓀ- |
| ,, ( रेशमी पुठ्याची ) ... ... ... | ·।·। | ᓀ- |
| गीता मोठ्या टैपांनीं छापलेली ... ... ... | २ | ᓀ-॥ |
| गोपालसहस्रनाम ( रेशमी पुठ्याचें ) ... ... | ·।·॥ | ᓀ॥ |
| गोपालसहस्रनाम ( साधें ) ... ... ... | ᓀ=। | ᓀ॥ |
| चतुःश्लोकी भागवत ... ... ... | ᓀ। | ᓀ॥ |
| तुळसीमहात्म्य ... ... ... ... | ᓀ॥ | ᓀ॥ |
| दण्डिकृत दशकुमारचरित्र ... ... ... | १॥ | ᓀ= |
| दत्तात्रयनामावळी ... ... ... ... | ᓀ= | ᓀ॥ |
| दुर्गास्तोत्र ... ... ... ... | ᓀ- | ᓀ॥ |
| देवीसहस्रनामावळी ... ... ... ... | ᓀ-॥ | ᓀ॥ |
| द्वादशस्तोत्र ... ... ... ... | ᓀ- | ᓀ॥ |
| शंकरानन्दीगीता ... ... ... ... | ५ | ·॥· |
| पंचरत्नगीता मध्यम टैपानी छापलेली ( साधी ) ... | ·।= | ᓀ- |
| ,, ( रेशमी पुठ्याची ) ... ... ... | ·॥· | ᓀ- |

हीं पुस्तकें मुंबईत काळकादेवीच्या रस्त्यावर " निर्णयसागर " छापखान्यांत रोख पैसे पाठविले असतां विकत मिळतील.

| | कि० | ट० |
|---|---|---|
| रत्नसमुच्चय … … … … | ०= | ०॥ |
| रसगङ्गाधर … … … … | ३॥ | ०≡ |
| रसिकाष्टक … … … … | ०॥ | ०॥ |
| रामगीता मूळ … … … … | ०॥। | ०॥ |
| रामचंद्रिका नांवाची संस्कृत शब्दरूपावलि… … | ०।० | ०॥ |
| रामरक्षा… … … … … | ०॥ | ०॥ |
| रामस्तवराज. … … … … | ०- | ०॥ |
| लघुयोगवासिष्ठ … … … … | ५ | ०॥० |
| लघुकौमुदी … … … … | ०।० | ०- |
| लक्ष्मीस्तोत्र … … … … | ०॥ | ०॥ |
| लौगाक्षिभास्करविरचित तर्ककौमुदी … … | ०= | ०॥ |
| वाल्मीकिरामायण सटीक … … … | ८ | ०॥।= |
| विक्रमोर्वशी नाटक … … … … | ०॥।० | ०- |
| विदुरनीति … … … … | ०।= | ०॥ |
| विद्यारण्य स्वामीकृत अनुभूतिप्रकाश … … | २। | ०= |
| विष्णुसहस्रनाम. ( साधें. ) … … … | ०- | ०॥ |
| ,, ( रेशमी. ) … … … | ०=॥ | ०॥ |
| विष्णुसहस्रनामावळी. ( साधी. ) … … | ०-। | ०॥ |
| ,, ( रेशमी. ) … … | ०=॥ | ०॥ |
| वैदिककोश … … … … | ०॥० | ०- |
| वैराग्यशतक … … … … | ०।०॥ | ०॥ |
| शब्दरूपावली … … … … | ०- | ०॥ |
| शिवसहस्रनामावळी. ( रेशमी. ) … … | ०≡ | ०॥ |
| ,, ( साधी. ) … … | ०-॥ | ०॥ |
| शिवगीता. ( साधी ) … … … | ०।० | ०- |

| | कि० | ट० |
|---|---|---|
| शिवगीता ( रेशमी ) ... ... ... | ।=। | ८/- |
| शिवतांडवस्तोत्र ... ... ... ... | ८/- | ८।। |
| शिवकवच ... ... ... ... | ८।।। | ८।। |
| शिवमहिम्न स्तोत्र ... ... ... ... | ८।।। | ८।। |
| शिवापराधक्षमापन स्तोत्र ... ... ... | ८।। | ८।। |
| शिशुपालवध. ( माघकाव्य ) सटीक ... ... | ८।। | ।॰ |
| शृङ्गारशतक ... ... ... .... | ८≡।। | ८।। |
| श्रीमद्भगवद्गीता बारीक टाईपांची ... ... | ।/- | ८।। |
| श्रीहर्षकृत रत्नावली नाटिका ... ... ... | ।= | ८।। |
| श्रीहर्षकृत प्रियदर्शिका नाटिका ... ... | ।।॰ | ८/-।। |
| सटीक कुवलयानंदकारिका ... ... ... | ।।।॰ | ८= |
| सटीक शिवगीता ... ... ... ... | १ | ८= |
| सत्यनारायण ... ... ... ... | ८/- | ८।। |
| सप्तशती प्रयोगांसहित बारीक टाईपांची ... ... | ।/- | ८।। |
| सप्तशती मोठ्या टाईपांची ... ... ... | १ | ८= |
| सप्तशती. सुटी प्रत ... ... ... ... | ।।।॰ | ८= |
| समयमातृका ... ... ... ... | ।।॰ | ८/- |
| समासचक्र ... ... ... ... | ८।।। | ८।। |
| सर्वपूजा ... ... ... ... ... | ८/- | ८।। |
| सिद्धांतकौमुदी. मध्यम टैपाची ... ... ... | २।। | ।॰ |
| ,, बारीक ,, ... ... ... | २ | ।॰ |
| सुभद्राहरणम् ... ... ... .... | ।॰ | ८।। |
| सुभाषितरत्नभाण्डागार ... ... ... | ३।। | ।/- |
| सूर्यसहस्रनामावळी. ( रेशमी )... ... ... | ८≡ | ८।। |
| ( साधी )... ... ... | ८/-।। | ८।। |